# Document Information

Text title : dhanadA kavacham
File name : dhanadaakavach.itx
Category : kavacha
Location : doc_devii
Author : Traditional
Language : Sanskrit
Subject : philosophy/hinduism/religion
Transliterated by : http://www.webdunia.com
Proofread by : Sridhar - Seshagiri <seshagir at engineering.sdsu.edu>
Latest update : December 29, 2001
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org

# ॥ धनदाकवचम् ॥

## ॥ धनदाकवचम् ॥

देव्युवाच
धनदा या महाविद्या कथिता न प्रकाशिता ।
इदानीं श्रोतुमिच्छामि कवचं पूर्वसूचितम् ॥

शिव उवाच
श्रृणु देवि प्रवक्ष्यामि कवचं मन्त्रवग्रहम् ।
सारात्सारतरं देवि कवचं मन्मुखोदितम् ॥

धनदा कवचस्यास्य कुबेर ऋषिरीरितः ।
पङ्क्तिश्छन्दो देवता च धनदा सिद्धिदा सदा ॥

धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ।
धं बीजं मे शिरः पातु ह्रीं बीजं मे ललाटकम् ॥

श्री बीजं मे मुख पातु रकारं हृदि मेऽवतु ।
तिकारं पातु जठरं प्रिकारं पृष्ठतोऽवतु ।
येकारं जङ्घयोर्युग्मे स्वाकारं पादयोर्युगे ।
शीर्षादिपादपर्यन्तं हाकारं सर्वतोऽवतु ॥

इत्येतत्कथितं कान्ते कवचं सर्वसिद्धिदम् ।
गुरुमभ्यर्च्य विधिवत् कवचं प्रपठेद्यदि ॥

शतवर्षं सहस्राणां सहस्राणां पूजायाः फलमाप्नुयात् ।
गुरुपूजां विना देवि नहि सिद्धिः प्रजायते ॥

गुरुपूजात्परो भूत्वा कवचं प्रपठेत्ततः ।
सर्वसिद्धियुतो भूत्वा विचरेद् भैरवो यथा ॥

प्रातःकाले पठेद्यस्तु मन्त्रजापपुरः सरम् ।
सोऽभीष्टफलमाप्नोति सत्यं सत्यं न संशयः ॥

पूजाकाले पठेद्यस्तु देवीं ध्यात्वा हृदम्बुजे ।
षण्मासाभ्यन्तरे सिद्धिर्नात्र कार्या विचारणा ।
सायङ्काले पठेद्यस्तु स शिवो नात्र संशयः ।

भूर्जे विलिख्त गुटिकां स्वर्णस्थां धारयेद्यदि ॥

पुरुषो दक्षिणे बाहौ योषिद्वामभुजे तथा ।
दक्षिणे बाहौ योषिद्वामभुजे तथा ।
सर्वसिद्धियुती भूत्वा धनवान् पुत्रवान् भवेत् ॥

इदं कवचम ज्ञात्वा यो जपेद्धनदां शुभे ।
शस्त्रघातमवाप्नोति सोऽचिरान्मृत्युमाप्नुयात् ॥

कवचेनावृतो नित्यं हि यत्रैव गच्छति ।
तत्रैव स महादेवि सम्पूज्यो नात्र संशयः ॥

॥ इति धनदा कवचं सम्पूर्णम् ॥

Visit http://www.webdunia.com for additional texts with Hindi meanings.



.. dhanadA kavacham ..
was typeset on April 10, 2015

Please send corrections to *sanskrit@cheerful.com*